वृथा क्रीळन्त इन्दवः सधस्थमभ्येकमित् । सिन्धोरूर्मा व्यक्षरन् ॥ ३ ॥

वृथा । क्रीळन्तः । इन्दवः । सधऽस्थम् । अभि । एकम् । इत् । सिन्धोः । ऊर्मा । वि । अक्षरन् ॥३॥

वृथा अनायासेन क्रीळन्तः इन्दवः सोमाः एकमित् एकमेव सधस्थं सहस्थानं द्रोणकलशं वा अभि अक्षरन्निति शेषः । सिन्धोरूर्मा वसतीवरीषु व्यक्षरन् ॥

एते विश्वानि वार्या पवमानास आशत । हिता न सप्तयो रथे ॥ ४ ॥

एते । विश्वानि । वार्या । पवमानासः । आशत । हिताः । न । सप्तयः । रथे ॥ ४ ॥

एते सोमाः पवमानासः पूयमानाः विश्वानि वार्या[1] वार्याणि वरणीयानि धनानि आशत व्याप्नुवन् । रथे हिताः स्थापिताः[2] न[2] सप्तयः अश्वा इव । ते यथा रथमभिमतं देशं प्राप्नुवन्ति तद्वद्धनमस्माकं प्रायच्छन्नित्यर्थः ॥

आस्मिन्पिशङ्गमिन्दवो दधाता वेनमादिशे । यो अस्मभ्यमरावा ॥ ५ ॥

आ । अस्मिन् । पिशङ्गम् । इन्दवः । दधात । वेनम् । आऽदिशे ।

यः । अस्मभ्यम् । अरावा ॥ ५ ॥

हे इन्दवः सोमाः अस्मिन् यजमाने पिशङ्गं बहुरूपं मणिमुक्ताहिरण्यादिभेदेन नानारूपं वेनं कामयन्तं बहुविधं कामम् आदिशे अस्मभ्यमादेशनाय आ दधात आयच्छत[3] । यः यजमानः अस्मभ्यम् अरावा - - - - प्रयच्छति प्राप्तकाम एव खलु ऋत्विग्भ्यः प्रयच्छति ॥

ऋभुर्न रथ्यं नवं दधाता केतमादिशे । शुक्राः पवध्वमर्णसा ॥ ६ ॥

ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् । आऽदिशे । शुक्राः । पवध्वम् । अर्णसा ॥६॥

ऋभुर्न उरु भासमानो रथस्वामीव स यथा रथ्यं रथस्य नेतारं नवं स्तुत्यं कुशलं सारथिनमग्र आधत्ते तद्वदस्मदीयेऽस्मिन् आदिशे स्वामिनि[4] केतं प्रज्ञानं दधात स्थापयत । हे सोमाः योऽस्मभ्यं प्रयच्छति तस्मिन्नित्यर्थः। हे सोमाः अर्णसा उदकेन शुक्राः दीप्ताः सन्तः पवध्वं क्षरध्वम् ॥

एत उ त्ये अवीवशन्काष्ठां वाजिनो अक्रत । सतः प्रासाविषुर्मतिम् ॥ ७ ॥

एते । ऊँ इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः । अक्रत ।

सतः । प्र । असाविषुः । मतिम् ॥ ७ ॥

त्ये ते एत उ एत एव सोमाः अवीवशन् कामयन्ते यज्ञम् । कान्त्वा च वाजिनः बलवन्तोऽन्नवन्तो वा सोमाः काष्ठाम् अक्रत निवासस्थानमकुर्वन् । द्रोणकलशादुद्गता[5] ग्रहानित्यर्थः[5] । सतः यजमानस्य स्तोतुर्वा मतिं बुद्धिं स्तुतिं वा प्रासाविषुः प्रैरयन् ॥ ॥ ११ ॥

' एते सोमासः ' इति सप्तर्चं द्वाविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' एते सोमासः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

---

१. ग-त-भ-' वार्या ' नास्ति । २. ग-युक्ता । ३. भ-स्थापयत । ४. ग-त्तदेशय स्वामिनिः त-भ-सं स्वामिनि । ५. ग-द्रोणकलशानित्यर्थः ।

एते सोमास आशवो रथाइव प्र वाजिनः । सर्गाः सृष्टा अहेषत ॥ १ ॥

एते । सोमासः । आशवः । रथाःऽइव । प्र । वाजिनः । सर्गाः । सृष्टाः । अहेषत ॥ १ ॥

vएते पूयमानाः vसोमासः सोमाः vसृष्टाः अध्वर्युणा vआशवः दशापवित्रादधोगमने शीघ्राः vप्र vअहेषत प्रहेषन्ते । शीघ्रगमने दृष्टान्तद्वयम् । आजौ सृष्टाः शीघ्राः vरथाइव तथोक्तलक्षणाः[1] vवाजिनः इव वेजनवन्तोऽश्वा इव[1]॥

एते वाताइवोरवः पर्जन्यस्येव वृष्टयः । अग्नेरिव भ्रमा वृथा ॥ २ ॥

एते । वाताःऽइव । उरवः । पर्जन्यस्यऽइव । वृष्टयः । अग्नेःऽइव । भ्रमाः । वृथा ॥२॥

vएते सोमाः vउरवः महान्तः vवाताइव[2] वायव इव[3] vवृथा अनायासेन व्यानशुः इत्युत्तरत्र संबन्धनीयम् । अथवाध्याहारेण निःसरन्तीति योज्यम् । तथा vपर्जन्यस्य vवृष्टयः vइव वर्षा यथा तथैव । किंच vअग्नेः vभ्रमाः भ्रमणा ज्वालासंचाराः vइव ॥

एते पूता विपश्चितः सोमासो दध्याशिरः । विपा व्यानशुर्धियः ॥ ३ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः । विपा । वि । आनशुः । धियः ॥३॥

vएते vसोमासः सोमाः vपूताः शुद्धाः vविपश्चितः प्राज्ञाः vदध्याशिरः दध्याश्रयणाः vविपा प्रज्ञानेन vधियः अस्मदीयानि कर्माणि vव्यानशुः व्याप्नुवन्ति ॥

एते मृष्टा अमर्त्याः ससृवांसो न शश्रमुः । इयक्षन्तः पथो रजः ॥ ४ ॥

एते । मृष्टाः । अमर्त्याः । ससृऽवांसः । न । शश्रमुः । इयक्षन्तः । पथः । रजः ॥४॥

vएते सोमाः vमृष्टाः दशापवित्रेण शोधिताः vअमर्त्याः अमरणधर्माणः vससृवांसः हविर्धानात् सरन्तः vपथः मार्गान् vरजः लोकांश्च vइयक्षन्तः गन्तुमिच्छन्तः vन vशश्रमुः न श्राम्यन्ति ॥

एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः । उतेदमुत्तमं रजः ॥ ५ ॥

एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि । आनशुः । उत । इदम् । उत्ऽतमम् । रजः ॥५॥

vएते सोमाः vरोदसोः[4] द्यावापृथिव्योः vपृष्ठानि vविप्रयन्तः विविधं गच्छन्तः vव्यानशुः व्याप्नुवन्ति । vउत अपि च vइदमुत्तमं vरजः द्युलोकं व्यानशुः । आहुतिद्वारेणेति भावः । रोदसोरित्यत्रान्तरिक्षोऽभिप्रेतः ॥

तन्तुं तन्वानमुत्तममनु प्रवत आशत । उतेदमुत्तमाय्यम् ॥ ६ ॥

तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः । आशत । उत । इदम् । उत्तमाय्यम् ॥६॥

vतन्तुं यज्ञं vतन्वानम् vउत्तमम् उत्कृष्टं सोमम् vअनु vआशत vप्रवतः नद्यः । vउत अपि च vइदं कर्म अनेन सोमेन vउत्तमाय्यम् उत्तमीकृतम्[5] । अथवा तन्तुं तन्वानं सोमं प्रवतोऽधःस्थिताः

---

१. घ–तथोक्तलक्षणसर्गा वाजिन इव सृष्टा अश्वा इव; त१.२.६.७-मु–उक्तलक्षणसर्गा वाजिन इव वेजनवंतोश्वा इव । २. ग-त३.४.५-भ४–वाता । ३. त-भ२.४–' इव ' नास्ति । ४. ग–रोदस्योः । ५. त१.२.६–°कृत्यं ।

सर्वा अन्वाशत । उतेदमुत्तमाय्यं रजः । द्युलोक इत्यर्थः । सोऽप्यन्वश्नुते पृथिव्या चान्तरिक्षेण च । उत्तमीकृतमुत्तमाय्यम् ॥

त्वं सोम पणिभ्य आ वसु गव्यानि धारयः । ततं तन्तुमचिक्रदः ॥ ७ ॥

त्वम् । सोम । पणिऽभ्यः । आ । वसु । गव्यानि । धारयः । ततम् । तन्तुम् । अचिक्रदः ॥७॥

हे ᵛसोम ᵛत्वं ᵛपणिभ्यः असुरेभ्यो लुब्धकेभ्यो वा सकाशात् ᵛगव्यानि गोहितानि ᵛवसु वसूनि गोयूथानि वसूनि चेति[1] वा ᵛआ आहृत्य ᵛधारयः[2] धारयसि । तथा ᵛतन्तुं यज्ञं प्रति ᵛततं विस्तृतं यथा भवति तथा ᵛअचिक्रदः शब्दमकार्षीः ॥ ॥ १२ ॥

'सोमा असृग्रम्' इति सप्तर्चं त्रयोविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'सोमा असृग्रम्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

सोमा असृग्रमाशवो मधोर्मदस्य धारया । अभि विश्वानि काव्या ॥ १ ॥

सोमाः । असृग्रम् । आशवः । मधोः । मदस्य । धारया । अभि । विश्वानि । काव्या ॥१॥

ᵛआशवः शीघ्राः ᵛसोमाः ᵛअसृग्रम् असृग्रन् सृज्यन्ते । ᵛमधोः मधुरस्य[3] ᵛमदस्य[3] मदकरस्य ᵛधारया असृग्रमिति संबन्धः । किं प्रति उच्यते । ᵛअभि लक्षीकृत्य ᵛविश्वानि सर्वाणि ᵛकाव्या काव्यानि स्तोत्राणि प्रति । स्तोत्रसमय इत्यर्थः ॥

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्यम् ॥ २ ॥

अनु । प्रत्नासः । आयवः । पदम् । नवीयः । अक्रमुः । रुचे । जनन्त । सूर्यम् ॥ २ ॥

ᵛप्रत्नासः पुराणाः केचित् ᵛआयवः शीघ्रगमना अश्वाः ᵛनवीयः नवतरं ᵛपदम् ᵛअनु ᵛअक्रमुः अनुक्रमन्ते । रूपकव्याहारेण सोमाः स्तूयन्ते । ᵛरुचे[4] दीप्त्यै[4] ᵛसूर्यं ᵛजनन्त कुर्वन्ति । दीप्तं कुर्वन्तीत्यर्थः । सोमप्यायनेन हि चन्द्रो रोचते ॥

आ पवमान नो भरार्यो अदाशुषो गयम् । कृधि प्रजावतीरिषः ॥ ३ ॥

आ । पवमान । नः । भर । अर्यः । अदाशुषः । गयम् । कृधि । प्रजाऽवतीः । इषः ॥ ३ ॥

हे ᵛपवमान सोम त्वं ᵛनः अस्मभ्यम् ᵛअर्यः अरेः ᵛअदाशुषः अप्रयच्छतः[5] ᵛगयं गृहं गृहोपलक्षितं धनम् ᵛआ ᵛभर आहर । तथास्मभ्यं ᵛप्रजावतीरिषः च[6] ᵛकृधि कुरु ॥

अभि सोमास आयवः पवन्ते मद्यं मदम् । अभि कोशं मधुश्चुतम् ॥ ४ ॥

अभि । सोमासः । आयवः । पवन्ते । मद्यम् । मदम् । अभि । कोशम् । मधुऽश्चुतम् ॥४॥

ᵛआयवः गन्तारः ᵛसोमासः सोमाः ᵛमद्यं मदकरं रसम् ᵛअभि ᵛपवन्ते क्षरन्ति । तथा ᵛमधुश्चुतं मधुस्राविणं ᵛकोशम् । रसाधारेण कोशशब्देन तत्रामिश्रितो रसो लक्ष्यते । तम् ᵛअभि पवन्त इति शेषः[7] ॥

---

१. भ१.२.३–वेति । २. ग-भ१.२.३–आधारयः । ३. त-भ–'मधुरस्य मदस्य' नास्ति । ४. घ–एतैः सोमैः रुचे दीप्तौ; त-भ–रुचे दीप्तौ । ५. त-भ–प्रयच्छतः । ६. घ–अन्नानि च । ७. घ–शेषः किमर्थं मदे मदं मदाय हर्षाय ।